क्रियावंतौ जातिव्यक्ती विशेषनित्यद्रव्येवृत्ती अवयवाद्ययोर्हि यथाक्रममवयवावा श्रिताएवावतिष्ठंते अविनश्यंतः
विनश्यदवस्थापन्नाश्रिताएवावतिष्ठंते यथा तंतुनाशे सति पटो न भवति [illegible] यथाचाश्रयनाशे स
त्ति गुणो नश्यति विनश्यतांतु विनाशकारणसामग्रीसांनिध्यं तंतुपटावपि अवयवावयविनौ तेन
तयोः संबंधः समवायः अयुतसिद्धत्वात् अयुतसिद्धत्वंतु पटस्य तंतुपरिहारेणानवस्थानात् तुरीपटयो
स्तु न समवायः अयुतसिद्ध्यभावात् नहि तुरीपटाश्रितैवावतिष्ठते नापि पटस्तुर्याश्रितएव अतस्तयोः
संयोगसंबंधएव तदेवं परमाण्वोः परमाणुघटयोः दण्डपुरुषादीनां संयोगसंबंधएव तदेवं तंतुषु समवेतः
पटः पटसमवेतकार्यमुत्पद्यते तत्समवायिकारणम् अतस्तंतवएव पटस्य समवायिकारणं नतुर्यादिः पट
स्य स्वगतरूपादेः ननु समवायिकारणं एवमस्तु घटोपि घटस्य समवायिकारणं घटस्य स्वगतरूपादेः ननु य
देव घटादयो जायंते तदैव तद्गतरूपादयोपि जायंते ततः समानकालीनत्वाद्गुणगुणिनोः सव्येतरगोविषाण
वत्कार्यकारणभावएव नास्ति पौर्वापर्याभावात् अतो न समवायिकारणं घटादयः स्वगतरूपादीनाम् कारण
विशेषत्वात् समवायिकारणस्य अत्रोच्यते न गुणगुणिनोः समानकालीनत्वं किंतु द्रव्यं निर्गुणमेव प्रथममु
त्पद्यते पश्चात्तत्समवेता गुणा उत्पद्यंते समानकालोत्पत्तौ तु गुणगुणिनोः समानसामग्रीकत्वाद्भेदो न

पूर्वोभावोस्त्येव किं २

साधकतमं करणं अतिशयितं साधकं साधकतमं प्रकृष्टं कारणमित्यर्थः ननु साधकं कारणमिति पर्यायस्त
देव न ज्ञायते किं तत्कारणं उच्यते यस्य कार्यात्पूर्वभावो नियतोऽनन्यथासिद्धश्च तत्कारणम् यथा तुरीवेमादि
कं पटस्य कारणम् यद्यपि पटोत्पत्तौ रासभादेर्दैवागतस्य पूर्वभावो विद्यते तथापि नासौ नियतः। तंतुरूपस्य तु नियतः
पूर्वभावित्वंकार्यत्वं अन्यथासिद्धः पटरूपजनकोपक्षीणत्वात् पटं प्रति कारणत्वे कल्पनागौरवात् तेनानन्य

थासिद्धत्वे नियतपूर्वभावित्वं कार्यत्वं यत्तु कश्चिदाह कार्यानुगतान्वयव्यतिरेकि तत्कारणमिति तदयुक्तम् नित्यवि
भूनां व्योमादीनां कालतो देशतश्च व्यतिरेकासंभवेनाकारणत्वप्रसंगात् तच्च कारणं त्रिविधं समवाय्यसमवायि
निमित्तभेदात् यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं यथा तंतवः पटस्य समवायिकारणम् तंतुष्वेव पटः
समवेतो जायते न तु तुर्यादिषु ननु तंतुसंबन्ध इव तुर्यादिसंबन्धोऽपि पटस्य विद्यते तत्कथं तंतुष्वेव पटः समवेतो
जायते न तु तुर्यादिषु सत्यम् द्विविधः संबंधः संयोगः समवायश्च तत्रायुतसिद्धयोः संबंधः समवायः अन्ययोस्तु सं
बंधः संयोग एव कौ पुनरयुतसिद्धौ ययोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ तदुक्तम् तावेवा
युतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोः अविनश्यदेकमपराश्रितमेवावतिष्ठते १ यथावयवावयविनौ गुणगुणिनौ क्रिया

...सिद्धति
तत्पूर्वभा
वेत्वंकार२
त्वमनन्य
५

2

ऽतत्कृतकत्वादिति । अत्र हिंसात्वं साध्यं तद्विपर्ययेणानित्यत्वेन कृतकत्वं व्याप्तं यतोऽयं कृतकत्वं
न पक्षत्वादि हेतुः तथा अपरोऽपि व्याप्यत्वासिद्धः यथा क्रतुवर्तिनी हिंसा अधर्मसाधनं हिंसात्वात् न
चात्रापि हिंसात्वं अधर्मे प्रयोजकं किं तु निषिद्धत्वमुपाधिरिति एवं तदुपाधिसद्भावात् व्याप्यत्वासिद्धोयं
हिंसात्वे हेतुः ननु साध्यव्यापकत्वे सति साधनाव्यापकोपाधित्वं लक्षणं यस्य स्वविषयमा तन्न निषिद्धत्वेना
स्ति तत्कथं निषिद्धत्वमुपाधिरिति मैवं निषिद्धत्वे उपाधिलक्षणस्य विद्यमानत्वात् तथा हि
साध्यस्याधर्मस्य व्यापकं निषिद्धत्वं यत्र यत्राधर्मत्वं तत्र तत्रावश्यं निषिद्धत्वस्य विद्यमानत्वात् न च
यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वं क्रत्वङ्गहिंसायां व्यभिचारात् अत्र हि क्रत्वङ्गहिंसायां हिंसात्वमस्ति
न च निषिद्धत्वमिति तदेवं द्विविधोऽसिद्धो दर्शितः संप्रति विरुद्धः कथ्यते साध्यविपर्ययव्याप्तो हेतुर्विरु
द्धः यथा शब्दो नित्यः कृतकत्वात् कृतकत्वं ह्यनित्यमेव अतः साध्यविपर्ययव्याप्तः कृतकत्वं हेतुर्विरुद्धः सा
मे व्याप हेतुरनैकान्तिकः सव्यभिचार इति वा स द्विविधः साधारणानैकान्तिकोऽसाधारणानैकां
तिकः तत्र प्रथमः पक्षसपक्षविपक्षवृत्तिः शब्दो नित्यः प्रमेयत्वात् अत्र प्रमेयत्वं हेतुः पक्षे शब्दे

सपक्षे नित्ये विपक्षे ऽनित्ये विद्यते सर्वस्यापि प्रमेयत्वादिति तस्मात् प्रमेयत्वादिति साधारणो नैकान्तिको हेतुः असा
धारणानैकान्तिकस्तु स एव यः सपक्षविपक्षाभ्यां व्यावृत्तः पक्षमात्रवृत्तिः यथा भूर्नित्या गन्धवत्त्वात् अत्र गन्धवत्त्वं
हेतुः सपक्षान्नित्यात् व्योमादेर्विपक्षादनित्याज्जलादेर्व्यावृत्तः गन्धवत्त्वस्य पृथिवीमात्रवृत्तित्वादिति तस्यैव व्यभि
चारस्तु कथ्यते सपक्षवृत्तित्वे सति विपक्षाद्व्यावृत्तिरेव हेतोर्गमकत्वं साध्यविपरीतव्याप्तस्यैव व्यभिचारः तन्नि
यमाभावो व्यभिचारः स च द्वेध्याकं भवति सपक्षविपक्षयोर्वृत्तो ताभ्यां व्यावृत्तो च यस्य प्रतिपक्षभूतं हेत्वन्तरं विद्यते
स प्रकरणसमः स एव सत्प्रतिपक्ष इत्युच्यते शब्दो ऽनित्यो नित्यधर्मानुपलब्धेः शब्दो नित्यो ऽनित्यधर्मानुपलब्धेरि
ति अत्र च विपरीतार्थसाधकं समानबलं यदनुमानान्तरं प्रतिपक्ष इत्युच्यते यत्तु नरतुल्यबलं न तत्प्रतिपक्षः
तथाहि विपरीतसाधकानुमानं त्रिविधं भवति उपजीव्यमनुपजीविकमनुभयं चेति तत्राद्यं बाधकं बलवत्त्वात्
यथा परमाणवो ऽनित्याः स्पर्शवत्त्वात् घटवदत्र हेतुः परमाणु अनित्यत्वं साध्यं यत्र परमाणुसाध
कानुमानस्य प्रतिपक्षः तदुपजीविकत्वेन बाध्यत्वात् किन्तु परमाणुसाधकानुमानं बाधकमेव उपजीव्यत्वात् तत्र
धर्मिग्राहकत्वादिति नहि प्रमाणेनाप्रमाणेन धर्मिणि परमाण्वादौ अनित्यत्वानुमानमिदं संभवति आम्रपासि

नः क्लेशहीनस्य निष्कामकर्मानुष्ठानात् अनागतधर्माधर्मावनर्जयतः पूर्वोपात्तधर्माधर्मप्रचयस्यो
गप्रभावात् समाहृत्य भुञ्जानस्य पूर्वकर्मनिवृत्तौ वर्त्तमानशरीरापगमे ऽपूर्वशरीराभावादेकविंशतिदुः
खसंबंधो न भवति कारणाभावात् सोयमेकविंशतिभेदभिन्नस्य दुःखस्य हानिर्मोक्षः सोपवर्ग इति इदानीं सं
शयमाह एकस्मिन्धर्मिणि विरुद्धनानाधर्मज्ञानं संशयः स च त्रिविधः एको विशेषादर्शने सति समा
नधर्मदर्शनजः यथा स्थाणुर्वा पुरुषो वेति एकस्मिन्नेव पुरोवर्तिनि द्रव्ये स्थाणुत्वनिश्चायकं वक्र
कोटरादिकं पुरुषत्वनिश्चायकं शिरः पाण्यादिकं विशेषमनुपश्यतः स्थाणुपुरुषयोः समानं धर्ममुच्च
तात्वं तांश्च पश्यतः पुरुषस्य भवति संशयः किमयं स्थाणुर्वा पुरुषो वेति द्वितीयस्तु संशयो विशेषाद
र्शने सति विप्रतिपत्तिजः किमयं शब्दो नित्य उतानित्य इति तथाहि एको ब्रूते नित्यः शब्दः इत्यपरोऽनि
त्य इति तयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमनुपश्यतो भवति संशयः किमयं शब्दो नित्य उता
नित्य इति तृतीयस्तु विशेषादर्शने सति असाधारणधर्मदर्शनजः संशयो यथा नित्यः स्यादनित्यो वा

नन्न साकारज्ञानवादिनिराकरणात् अत एव ज्ञानाकारेणार्थानुमानमपि निरस्तं प्रत्यक्षादिसिद्धत्वात् घटादेः
सर्वं ज्ञानमयमिति रूपं अर्थप्रतिबद्धस्यैव तस्य मनसा निरूपणत्वात् घटज्ञानवानहं न तु ज्ञानवानहमि
त्येतावन्मात्रं जायते अंतरिंद्रियं मनस्तच्चोक्तमेव प्रवृत्तिर्धर्माधर्ममयायागादिक्रियानिषिद्धक्रियाच
प्रवृत्तिः यागव्यवहारसाधनत्वात् दोषाः रागद्वेषमोहाः रागद्वैष इच्छा द्वेषोमन्युः क्रोध इतियावत्
मोहोमिथ्याज्ञानंविपर्यय इतियावत् पुनरुत्पत्तिः मृतात्मनः पूर्वदेहनिवृत्तिः उत्तरदेहसंघात
लाभः फलंपुनर्भोगं सुखदुःखानुभवो भोगः पीडादुःखं तच्चोक्तमेव मोक्षोपवर्गः सचैकविंशति
भेदभिन्नस्य दुःखस्यात्यंतिकीनिवृत्तिः एकविंशतिभेदास्तु शरीरं षडिंद्रियाणि षड्विषयाः षड्बु
द्धयः सुखदुःखंच गौणमुख्यभेदात् सुखदुःखमेव दुःखानुषंगात् अनुषंगोऽविनाभावः सचायमनुप
चारो मधुनिविषसंपृक्ते मधुनोपि विषपक्षनिक्षेपवत् सचपुनरपवर्गः कथमुच्यते शास्त्राद्विदितप
दार्थतत्त्वस्य विषयदोषदर्शनेन विरक्तस्य मुमुक्षोः ध्यायिनो ध्यानपरिपाकवशात्साक्षात्कृतात्म

ज्ञानमित्युक्ते व्रह्मरूपस्य व्रह्मत्वेन रपूर्वकत्वासंभवात्तद्व्यावृत्त्यर्थं प्रमाणजन्यज्ञानमित्युक्तम् तथापि धारावाहिक

वि ज्ञानेऽज्ञातज्ञातानां हि साधयितृत्वेन तत्पूर्वकभावात्तद्व्यावृत्त्यर्थं विवादास्पदमित्युक्तं तज्ज्ञानं किमि

त्यपेक्षायां व्यक्त्यर्थं प्रमाणज्ञानमित्युक्तम् अत्र धर्मी दर्शितः अथ साध्यधर्ममाह स्वप्रागभावेति स्वं तत्पूर्व

वृत्तिमित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनतापत्तिरिति तद्व्यावृत्त्यर्थमाह स्वदेशगतेति स्वाश्रयगतेत्यु

क्ते दृष्टान्तस्य साध्यवैकल्यं स्यात् नहि तमो दीपगतमतः स्वदेशगतेत्युक्तिः धर्माधर्मव्यावृत्त्यर्थमाह स्वनिवर्त्ये

ति ननु कथं स्वनिवर्त्यशब्देन धर्माधर्मव्यावृत्तिः ज्ञानोत्पत्तिहेतुभूतमदृष्टं हि नैव ज्ञानोत्पत्त्या नश्यतीत्येवं सर्वेषां

धर्माधर्मयोर्ज्ञानफलकत्वाभावात् ज्ञानोत्पादकव्यतिरिक्तधर्मादेः पूर्वं तत्स्वदेशे विद्यमानत्वाच्च यद्वा स्वज्ञा

निवर्त्यपदेन संस्कारव्यावृत्तिः नहि संस्कारो ज्ञाननिवर्त्यः भयादिभयादिव्यावृत्त्यर्थमाह विषयावरणेति प्राग। स्व

भावस्यैवंविधत्वात्तद्व्यावृत्त्यर्थमाह स्वप्रागभावव्यतिरिक्तेति इयं प्रतिलोमव्यावृत्तिः वस्त्वन्तरपूर्वकमित्युक्ते

अभावस्यापि परार्थत्वेन वस्तुशब्दवाच्यत्वात्तद्व्यावृत्त्यर्थमाह स्वप्रागभावव्यतिरिक्तेति घटादिस्वविषयव्या र्थ

वृत्त्यर्थमाह स्वविषयावरणेति कुड्यादिव्यावृत्त्यर्थमाह स्वनिवर्त्येति वेदगतचैतन्याभिव्यक्तिप्रागभावव्याव

त्त्यर्थमाह स्वदेशगतेति प्रमाणज्ञाने निरस्ते वेदगतचैतन्यमभिव्यक्तं भवतीति तत्त्वदीपादौ अभिव्यक्तिप्रागभा

गभावस्य विषयावरणत्वं प्रकाशावरणत्वं ननु तत्प्रतिबन्धकत्वमित्यनुलोमव्यावृत्तिः हेतुमाह प्रकाशितेति

साक्षाद्रूपं परमात्म अवाप्य व्यवहारान्तर्गतं एवं हेतुत्वं प्रकाशकत्वमिह विवक्षितम् साक्षाद्रूपं पदयोर्वेत्युक्ते हि दी

2

प्रभाभावस्य ज्ञानेन्द्रियेणुत्वानाग्रमसिद्धिः इदं रजतमिति ज्ञाने व्याप्तिपरिहारायाबाध्यत्ववहारानुगुण्यमिनुक्तं प्रकाशत्वादित्यु

क्तेधाराबाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वेपि सिद्धसाधनविरहिन प्रमाभावाद्व्याप्तेः तेनैकान्तिकत्वं स्यादिति तदभाव

त्पर्थमाह अप्रकाशितार्थप्रकाशकत्वादिति इंद्रियैर्व्यनैकान्तिकत्वव्यावृत्त्यर्थं भासमानत्वे सतीति हेतुर्विशेष्य

तिमंतव्यम् दृष्टांतमाह अंधकारवदिति दीपप्रभाववदित्युक्ते उत्तरोत्तरप्रमाणाप्रकाशितार्थप्रकाशकत्वाभावात्

साधनविकलतास्यात् तन्निवृत्त्यर्थं व्यतिरेके पूर्वकत्वाभावात् साध्यविकलता च स्यादिति तद्व्युदासार्थं प्रथमोत्प

न्नप्रदीपप्रभाववदित्युक्ते तत्याभिदिवादौ पश्चात्तथाविधत्वादर्शनात् तच्च तत्र पर्यं अंधकारपदमुक्तं दृष्टांतस्य सा

ध्यविकलतामाशंक्यपरिहरति आलोकेति आलोके सत्यपि उलूकादीनामंधकारदर्शनवादनुमानमित्याकर

माह रूपदर्शनाभावमात्रं वेति प्रमाणनिरूपितानास्तमः प्रतिपत्तिनिर्वाहार्थमाह रूपदर्शनेति अन्येनैयायिका

दिमिकं [illegible] मतं संपन्ने ताप्रकाशानुपपन्नत्वात् द्रव्यान्तरत्वं दूषितं रूपवत्त्वे [illegible] मे व अनुत्वा

दनुत्पादत्वे तमसस्तु रूपवत्त्वाद्द्रव्यत्वमेवास्यात् तत्र रूपवत्त्वरहितानिवाय्वाकाशादीनि नोत्पादकानि

भवंतिस्पर्शरसगंधविरहानन्यान्यपि द्रव्यारंभकारणात्तत् प्रक्रमे एतदेहि काय्यें वैशेषिकारंभः इयमनुत्पत्तिनुप

पत्तिः आलोकानपेक्षचक्षुर्ग्राह्यत्वमालोकसन्निधानान्वयव्यतिरेकस्याग्राह्यत्वे रूपवत्त्वप्रतीति

रुक्तं तिरेव निमीलने नीलप्रतिभासवदिति तस्यानुपपत्तिः अत्र परिहारो वार्तिककारेणोक्तः तमः खलु च

लंनीलं परापरविभागवत् प्रसिद्धद्रव्यवैधर्म्यान्नवभ्योभेत्तुमर्हतीति स एवात्रोच्यते तत्र परापर [illegible]

बहुलत्वश्रावदेनोक्तं रूपवत्वेपि नीलशब्दार्थः उक्तः द्रव्यान्तरत्वेन दशमद्रव्यत्वमुक्तं नवद्रव्यत्वीकारोहि

तेषां पृथिव्यादीनां द्रव्याणां मन्योन्यवैधर्म्यान्तत्वीक्रियते अन्यथा पृथिव्यादिद्रव्याणां नान्यतरंगपरत्वात् प्रभावादिति व

क

क

राम

तुं शक्यते एवं द्रव्ये इत्यादि न भिमतं द्रव्याणां परस्परवैधर्म्यात् एवं नवद्रव्य वैधर्म्य इति समं गीकार्यमिति वा
र्त्तिककाराणां: निमीलने नील प्रतिभाने नीलत्व विषय इदं त्ववाधितत्वान्न तत्याज्य मितुमर्हति तथापि रूपोपल
ब्धिवेलायामनुपलब्धे र्निमीलनवदपि संभवतीति शंकितं प्रत्युक्तमिति चेन्न उलूकादीनामस्मदादि रूपोपलब्धि
वेलायां रूपानुपलब्धौ तद्रूपोपलब्धेरपि शंकितत्वापाताद् उलूकादि रूपोपलब्धि वेलायामस्मदादे रूपानुपल
ब्धावस्मदादि रूपोपलब्धेरपि शंकितत्वप्रसंगात् यागमस्याप्याशंकाया निरस्तत्वात्तमसो द्रव्यत्वम
वसीयते तमः ससर्ज भगवान् नाहो न रात्रिर्न नभो न भूमिर्नासीत् तमो ज्योतिरभून्न चान्यत् यस्य तेजः शरीरं य
यस्य तमः श
रीरम्
स्य तमः शरीरमिति श्रुत्यन्तरे संहायत्वे शरीरत्वानि हि श्रूयते आलोकनैरपेक्ष्येण यथा ज्ञातविशेषप्रयुक्तं ह
श्यते तथात्वे पार्विशेषप्रयुक्त मप्युपपद्यते यथा लोके कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणं न पुनः प्रतु
तवधातीतम् कार्य्यं कारण निरूपणायामपन्हुव महति इति न्यायारवाधित प्रतिपत्ति सिद्धस्य तमसजत्या
दकं कल्प्यमिति नोत्पादकानुपपत्ति प्रकानुपपत्ति वा तमो नाम द्रव्यं बहुल विरलं मेचकरूपवि
प्रतीते केनाप्यविवादेपि नवापयद्दत्ते अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकस्य तुः प्र
त्ययपति हि तद्देशे न वशात् तमोऽद्रव्यमित्येव भाष्यकारमतं सिद्धान्ते तस्य दूषितत्वात् स्पर्शत्वरहितत्वसं
हार्य्यत्वस्य वणाद्य [illegible] द्रव्यत्वादाकाशवत् कार्य्यं तमः रूपवत्वे पञ्चीकरणोद्भवपद्यते यद्वा तेजः कार्य्यं तमः
रूपवत्वात्स्पर्शानुपलब्धिस्त्वजत्वादिति

धुरं चांकं रक्तपित्तप्रसादनं ॥ स्वाद्वम्लं साम्लमधुरं कषायानुरसं भवेत् ॥ स्वादम्लं सं
गुणा ज्ञेयाः सामान्यदधिवज्जनैः ॥ यत्तिरोहितमाधुर्यं व्यक्ताम्लं तत्तदम्लकं ॥ अम्लं
तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनं ॥ तदत्यम्लं दंतरोमहर्षकंठादिदाहकृत् ॥ अत्य
म्लं दीपनं रक्तपित्तदुष्टकरं परं ॥ अथ गोदधिगुणाः ॥ गव्यं दधिविशेषेण स्वाद्वम्
लं रुचिप्रदं ॥ पवित्रं दीपनं स्निग्धं पुष्टिकृत्पवनापहं ॥ उक्तं दध्नामशेषाणां मध्ये ज
व्यं गुणाधिकं ॥ अथ माहिषदधिगुणाः ॥ माहिषं दधि वातघ्नं रक्तपित्तप्रसादनम्
गुरुस्वादुपरं बल्यं रक्तवृष्यमग्निमते हितं ॥ अथ छागीदधिगुणाः ॥ आजं दध्युत्तमं ग्रा
हि लघुदोषत्रयापहं ॥ शस्यते श्वासकासार्शःक्षयकार्श्येषु दीपनं ॥ अथ पक्वदुग्धद
धिगुणाः ॥ प्रसारं दधि संग्राहि कषायं वातलं लघु ॥ विष्टंभि दीपनं रुच्यं ग्रहणीरो
गनाशनं ॥ अथ वस्त्रबद्धदधिगुणाः ॥ गालितं दधि सुस्निग्धं वातघ्नं कफकृद्गुरु ॥
बलपुष्टिकरं रुच्यं मधुरं नातिपित्तलं ॥ अथ शर्करादिसहितदधिगुणाः ॥ सशर्कं

रं दधि स्वाविज्ञातं तदा हन्ति तत्॥ तगुरुं बालतनुहृद्यं वृंहणं तर्प्पणं गुरु॥ अथ रा
त्रौ दधिसेवने विशेषः॥ न नक्तं दधि भुंजीत न चाप्यघृतशर्करं॥ नामुद्गसूपं नाक्षौ
द्रं नोष्णं नामलकैर्विना॥ अथार्थः॥ रात्रौ दधि न भुंजीत भुंजीत चेत्तदा अघृतशर्करंस
मुद्गसूपमक्षौद्रमुष्णं विनामलकं च दधि न भुंजीत॥ तेन घृतशर्करादियुक्तं दधि
रात्रावपि भुंजीतेत्यर्थः॥ तथा च॥ शस्यते दधि रात्रौ शस्तं चाम्बुघृतान्वितं॥ रक्तपित्तक
फोत्थेषु विकारेष्वहितं त्वन्यथा॥ तत् अम्बुघृतान्वितमिति॥ अथर्तुविशेषे विधिनिषे
धौ॥ हेमंते शिशिरे चापि वर्षासु दधि शस्यते॥ शरद्ग्रीष्मवसंतेषु प्रायशस्तद्विगर्हि
तं॥ अविधिना दधिसेवने दोषमाह॥ ज्वरासृक्पित्तवीसर्प्पकुष्ठपांडुभ्रमान्भ्रमा
न्॥ प्राप्नुयात्कामलां चोग्रां विधिं हित्वा दधिप्रियः॥ अथ मस्तुरस्य मस्तुनश्च लक्षण
गुणाः॥ दध्नस्तूपरि यो भागो घनस्नेहसमन्वितः॥ स लोके सर इत्युक्तो दध्नो मंड

छिछिका पिच सस्नेहं निर्जलं घोलं मथितं त्वसरोदकम् चतुर्थांश जलं तक्रमुदश्वि ४५

स्तुमस्त्विति॥ सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः॥ सोम्लो वस्तिप्रमथनः पित्त
श्लेष्मविवर्द्धनः॥ मस्तु क्लमहरं बल्यं लघु भक्ताभिलाषकृत्॥ स्रोतोविशोधनं ह्ला
दि कफतृष्णानिलापहं॥ अवृष्यं प्रीणनं शीघ्रं भिनत्ति मलसंग्रहं॥ इति भावप्रका
शे दधिवर्गः॥ अथ तक्रवर्गः॥ तत्र तक्रस्याभिधानानि नामानि लक्षणगुणाश्च॥
घोलं तु मथितं तक्रमुदश्वित्त्वद्ववादिकं॥ द्विगुणं भोसरं श्वेतरसं तु छिछिका
पिच॥ श्वेतरसं॥ छंछा छिइति लोके॥ वातपित्तहरं घोलं मथितं कफपित्तनुत्॥ तक्रं
ग्राहि कषायाम्लं स्वादुपाकरसं लघु॥ वीर्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम्
ग्रहण्यादिमतां पथ्यं भवेत्संग्राहि लाघवात्॥ किंचित्स्वादुविपाकित्वान्न च पि
त्तप्रकोपनं॥ कषायोष्णाविपाकित्वाद्रौक्ष्याच्चापि कफापहं॥ न तक्रसेवी व्यथते क
दाचिन्न तक्रदग्धाः प्रभवंति रोगाः॥ यथा सुराणाममृतं सुखाय तथा नराणां भुवि
तक्रमाहुः॥ उदश्वित्कफकृद्बल्यं श्रमघ्नं परममतं॥ छिछिका शीतला लघ्वी पित्त

२१

श्रमतृषापहारी॥ वातघ्नं कफकृत्तत्तु दीपनीयं च वर्णितं॥ अथोद्धृतघृतस्तोको
द्धृतघृतानुद्धृतघृतानां तक्राणां गुणाः॥ समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः॥
स्तोकोद्धृतघृतं तस्माद्गुरु वृष्यं कफावहं॥ अनुद्धृतघृतं सांद्रं गुरु पुष्टिकफप्रदम्॥
अथ दोषविशेषेण तक्रविशेषाः॥ वाते म्लं शस्यते तक्रं शुंठीसैंधवसंयुतं॥ पित्ते स्वा
दु सितायुक्तं सव्योषमघृतं कफे॥ हिंगुजीरयुतं घोलं सैंधवेन च संयुतं॥ भवेदतीव वा
तघ्नं मूर्शोतीसारहृत्परं॥ रुचिपुष्टिदं बल्यं वस्तिशूलविनाशनं॥ मूत्रकृच्छ्रे तु सगु
डं पांडुरोगे सचित्रकं॥ अथामपक्वतक्रगुणाः॥ तत्रामामे कफं कोष्ठे हंति कंठे करोति
च॥ पीनसश्वासकासादौ पक्वमेव प्रयुज्यते॥ अथ तक्रसेवननिमित्तानि॥ शीतका
लेग्निमांद्ये च तथा वातामयेषु च॥ अरुचौ स्रोतसां रोधे तक्रं स्यादमृतोपमं॥ तत्तु
हंति गरछर्दिप्रसेकविषमज्वरान्॥ पांडुमेदोग्रहण्यर्शोमूत्रग्रहभगंदरान्॥ मे
हं गुल्ममतीसारं शूलप्लीहोदरारुचीः॥ श्वित्रकोष्ठगतव्याधीन्कुष्ठशोथतृषाक्रि

२१